# कौशिकी शिक्षा

द्वैधे चैव समुत्पन्ने लक्षणान्निर्णयो भवेत्
लक्षणं न विनाशि स्यात्संप्रदायोऽविनाशवान् १
अग्नेरनीकं युक्ष्वा हि विश्वे देवाः द्वितीयकः
उदग्ने अयमुत्तरान्नमो वन्ये निदर्शनम् २

मः स्वयम्
अतो ह्रस्वो भवेदेव देवानां हृदये विना ९
शषहे त्र्यक्षरे चैव संयोगो यत्र दृश्यते ।
ऋवर्णो न तु कर्तव्यः शषहेषु च १०
यथा
पुत्रत्रः कुक्कुटः कामलुब्धश्च शब्दम् ।
कुर्वन्पुनः पुनः एवं वर्णाः प्रयोक्तव्याः कुक्कुटोऽसि निदर्शनम् ११
यथा कामातुरा नारी शब्दं कुर्वति यादृशम्
तद्वद्वर्णा प्रयोक्तव्या सिꣳह्यसीति निदर्शनम् १२
यस्तेस्ताः पातन्नो युवꣳसुराममश्विना
इडे रन्तेऽश्विनकृतस्य ते ह्रस्वाः पञ्च सरस्वतीः १३
प्रवो गुरू पदादिस्थावग्रहां न गतो लघुः
पदमध्येऽवग्रहादौ गुरूः स्यातां यवा पुनः १४
अवक्षरमनायुष्यं विस्वरं व्याधिपीडितम्
अक्षताः शस्त्ररूपेण वज्रं पतति मस्तके १५
लक्षणेन विवर्णान्युच्यते यस्तु पाठकः
आयुर्हानिरधः पाती ब्रह्मघ्नोऽसौ न संशयः १६
लक्षणेन विना वाणी निर्मलापि न शोभते

प्रमदा रूपसंपन्ना दरिद्रस्येव योषिता १७
विश्वारूपाएयबोध्यग्निरेधोऽसि केतुङ्कएवन्निति
चत्वारि मूर्द्धन्यमुषा अन्यत्र मुखाः १८
ऋवर्णो यत्र दृश्यते रेफं शिरसि संयुतम्
रकारादि प्रयुञ्जीत ऋवर्णस्तदनन्तरम् १९
न याता नीयते स्वर्गं तिर्यक्तं तु मनीषिभिः
तिर्यक्त्र्यंगुमुच्चं स्यात्सस्थानं नरे वच २०
भूत्यालये पिशाचोऽपि गर्जितोऽपि निदर्शनम्
एवं वर्णाः प्रयोक्तव्याः सम्माज्र्मीति निदर्शनम् २१
मा त्वा यात्मदाश्चैव सह स्तोमास्तथैव च
पदमध्ये लघुत्रीणि पादादौ च गुरुर्भवेत् २२
नीचे नीचतरानुच्चैस्तिर्यक्ता समवृत्तयः
स्वस्थाने सासा ये नित्यं हस्तेन च मुखेन च २३
स्फुरणानाम् अपां फेने निदर्शनम् २४
माध्यन्दिनीय शाखायां ज्ञेयं प्लुतचतुष्टयम्
प्रणवो जघनो नाम स्कंदकी रुहणी तथा २५
सामानि चान्यशाखासु त्रिन्नकोमं लघ्वनिः
दीर्घं स्यान्मकारे च ओप्लुतप्रणवः स्मृतः २६
स्वरान्ते अत्तुना इत्तघनो विवेशा३ प्लुतं विदुः
स्कंदकी च नकारान्ते लाजीं३ छाची३ निदर्शनम् २७
रुहणी च तकारान्ते असी३दुपरि स्विदासीत्
अनुदात्ते त्रिमात्रास्तु विवेशापि परिस्विदा २८
यदस्य कालो नेषा स्याल्लोपावग्रहा ह्रस्वता
प्लुतास्तु प्लुतचत्वारैर्यजुर्वेदे बुधैः स्मृताः २९

अग्रे रेफो ह्ययोति पश्चाद्रेफस्य ऊर्ध्वता
जलं तुविकान्यायः हकारो रेफसंयुक्तो नादो भवति
नित्यशः ३०
द्वितीये न समायुक्तो न तु नादी कथं च न
स जोषा इद् रेफस्य ऊर्ध्वयानृषयः पवित्रेण पुनीहिनः
३१
तीव्रान्घोषान्पञ्चरंजनः पूषा पंचा अं उं नंः ।
ओकारादि प्लुतं ज्ञेयं अग्ना द्वितीयमेव च ३२
लाजी छाची चतुर्थस्य विवेशा इति पंचमः
तिरश्चीनो द्वि षष्ठो सप्तमो ह्यष्टमो नैव विद्यते ३३
सुसंदृशं त्वा ये जनेषु अति विश्वाः भुज्युः सुपर्णाः
वर्षाभिर्ऋतुनां उतनः षडेते सस्तकारे भवति ३४
पञ्च रंगाः प्रवर्तन्ते घातनिर्घातवज्रिणः
अहीनप्रहिणो ज्ञेयो यथा अ इ उ ऋ ओ इति ३५
इयन्ते यज्ञिया सुवीरो वीरात्सुप्रजाः
रश्मिना सत्याय परो दिवा षट् पृथिव्या अन्यत्र पृथिव्याः
३६
ऊष्माणि भवन्ति आप्याय्यमानो यमो रय्यै धाय्यारूप७
श्रवाय्यं नृपाय्यं पौरुषेय्या हृदय्या सह रय्या निचाय्य
सन्नाय्य संताय्येति च प्र ३७
हिणस्तु प्रहरो श्रिः पंचरंगस्य तिष्टंति देवाँ२
आसादयादिहेति घातः ।
देवाँ२ । इदेषीति निर्घातः ।
नान्याँ२ । उपेति वज्रिणः । देवाँ२ ऋतुभिः ।

प्रहिणः अमित्राँ ओषतात्तिग्महेते इति ३८
प्रहरोऽग्निस्तथैव च ३९
अरण्यस्यागते पारे शब्दं कुर्वंति यो नरः ।
एवं वर्णाः प्रयोक्तव्याः पृश्निरक्रमी निदर्शनम् ४०
कौरं कुंभं जलं गत्वा शब्दं कुर्वन् क्षणद्वयम्
एवं वर्णाः प्रयोक्तव्याः नॄः पाहीति निदर्शनम् ४१
उद्ब्रेकं तु भवेत्तस्मिन्निश्वासो लघुरुच्यते
एवं वर्णाः प्रयोक्तव्याः शर्मासीति निदर्शनम् ४२
लक्षणं न त्यजेद्धीमान्संप्रदायो भवेद्यथा
लक्षणं न विनाशि स्यात्संप्रदायो भवेद्यथा ४३
स्वरहीना यथा वाणी वस्त्रहीना सथांगना
एवं वर्णा न शोभन्ते प्राणहीना यथा तनुः ४४
यथा वानरशाखायां उत्पतन्ति पतन्ति च
तद्वद्वर्णाः प्रयोक्तव्या इहेहेति निदर्शनम् ४५
विरामोऽवसान विवृतिश्चावसाने क्रमाद्वच
तथा
परे पदे च पादस्थाने शून्ये हस्तं विधीयते ४६
यथाघटागतं शब्दे दीर्घावाद्य क्रमो भवेत्
तद्वद्रंगं विजानीयाद् महाँ इति निदर्शनम् ४७
यथा भारभरा क्रान्ताः शब्दं कुर्वन्ति ये नराः
एवं वर्णाः प्रयोक्तव्या होतायक्षेति दर्शनम् ४८
शृङ्गवद्वालवत्सस्य कुमार्यास्तनयुग्मवत्
नेत्रवत्कालसर्पस्य स विसर्ग इति स्मृतः ४९
उदात्तमक्षरन्नास्ति स्वरितस्वर दृश्यते

तत्र पाणिः प्रतिष्ठेत उदात्तैः किं प्रयोजनम् ५०
अनुस्वारापूर्वयोर्हकारयोः संयोगस्य सयकारो भवति
सिꣳह्यसि षूष्णो रꣳह्या प्रथमा सꣳस्कृतिरिति ।
अनुस्वारो द्विमात्र स्यादुवर्णे व्यंजनोदयात्
ह्रस्वो वा यदि वा दीर्घो देवानाꣳ हृदयेभ्य इति ५१
प्रकृत्या संधयेद्वर्णान्पदसंकाले विभेदयत्
स समुच्चारयेद्विद्वान्ब्रह्मलोके महीयते ५२
विद्युर्नरं धिषः प्रोक्ष्यमाण पितरो नाराशꣳसाः
सन्त इति पादः उच्चैः अनुदात्त अ-यामेन ५३
ऊर्ध्वगमनेन गात्राणां यः स्वरः निष्पद्ये
स उदात्तसंज्ञो भवति नीचैरनुदात्तः समाहारः स्वरितः ५४
अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः
स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः ५५
लोहकार इवा कर्म्मं भस्मसातकुरुते यदि
एवं वर्णाः प्रयोक्तव्याः संवत्सरो निदर्शनम् ५६
आसं च तथा तप्तं निक्षिपेद्वेश्म संध्यतः
तच्छब्दं कुरुते प्राज्ञ परिवत्सरो निदर्शनम् ५७
डुं रो धरदेशे च कुंपाती च पुनः पुनः
एवं वर्णाः प्रयोक्तव्या इमं स्मेति निदर्शनम् ५८
यत्र यत्र तु रंग स्यात् द्वे सार्द्धं योजयेद्बुधः
करेण तारितस्याङ्गं तद्वत्कालेषु रंगयोः ५९
अहीनप्रहारो ज्ञः यथा अ इ उ ऋ ओ इति निदर्शनम् ६०
इति कौशिकाचार्यमतानुसारिणी शिक्षा समाप्ता